एस्.जगन्नाथः। मैसूरु
jagannathas1956@gmail.com




७
२५.३.२०२०
बुधवासरः

दशस्वपि दिक्षु कटाक्षं पातयन्ती संस्कृतपत्रिका।

## जगन्नाथीयम्

**सर्वदा न जयति क्षमागुणा
धोरणी मृदुतरा कु-मण्डले।
प्रस्तरः सुमदलेन भेद्यताम्
एवमुन्नतमतिः क ऊहताम् ?**

### कल्पना

जीवनं बहुभावनं
जगति विलसति पावनम्।
वर्णमयमृजुरोहितं
नयनयोर्मम बहुहितम्।
आशु चलति पिपीलिका
चलननीतेः पालिका
तरुलतानां मर्मरे
जयति भाषा मुद्-भरे।
कर्णपतिते खगरवे
राजते सुकृतं नवे
नासिका विमलानिलं
जिघ्रति च सुमपरिमलम्।
रसनया फलमद्यते
संमदेनास्वाद्यते।
मञ्जुलं गुञ्जत्यलिः
स्रंसते कुसुमावलिः।
काल ! मा भव चञ्चलः
क्वापि संकटसंकुलः।

## सर्वत्र कोरोना

यद्यपि कोरोना-वैरस्-सम्बन्धिनी वार्ता संस्कृतेतराभि र्भाषाभिः प्रकाश्यमानासु पत्रिकासु विजृम्भते-'तत्र कश्चन मृतः, अत्र रोगोऽयं संक्रान्तो विशत्यधिकेषु जनेषु' इत्यादिका। संस्कृतपत्रिकायामपि सैव वार्ता किमर्थं प्रकाशनीया? पिष्ट-पेषितोऽर्थः कस्मै रोचताम् ? इति चिन्तयंस्तत्र लेखनीं व्यापारयितुं स्वयमहं नासं सोत्साहः। परन्त्वन्यभाषासु लभ्यमानानां विषयाणां संस्कृताद् बहिष्करणमेव संस्कृतपतनस्य हेतुरिति मम दृढो विश्वासो यमधिकृत्य किञ्चनालिखमपि। कोरोनाम् अधिकृत्य नाहं किञ्चिदपि विवक्षामि अज्ञातत्वात् तद्विषये। परन्तु कोरोना-मधिकृत्य कैश्चन किं कृतमिति विषये किञ्चन वक्तुमुत्सहे।

परह्यः सर्वत्र राष्ट्रे कोरोनाभैषज्यनिर्मितये प्रयत मानानां, कोरोनावैराण्वाक्रान्तान् जनान् चिकित्सतां च वैद्याना मुत्साहं वर्धयितुं तेषा कार्तज्ञ्यं च दर्शयितुं-करतालिका सर्वैरपि नागरकैः सायं पञ्चवादने करणीयेति प्रधानमन्त्रिणा विज्ञप्तम्। सर्वैः सोत्साहैः कृतैव सा-यस्मिन् विषये सर्वत्र राष्ट्रे प्रशंसा कृता। परन्तु केचन कर्तव्यधर्महीनाः गृहाद् बहिरागत्य वीथीषु कोलाहलमकुर्वन् यन्नाभिप्रेतमासीत् प्रधानमन्त्रिसंदेशस्य।

ह्यस्तु राष्ट्रस्य केषुचन भागेषु परममेवाज्ञानं प्रदर्शितं जनतया। 'काऽपि कोरोनो-निमित्तका समस्या नैवास्ति' इतीव सन्तुष्टया तया वीथीषु संघशश्चलनं व्यापारव्यवहारादिकं चारब्धम्। रक्षिभटैरत्र काचन धृष्टताऽवलम्बिता। मनसे यथा रोचेत तथा वीथीषु वलमानान् जनान् अपसारयितुं दण्डप्रयोग आश्रितस्तैः। तेऽपि वराकाः किमन्यत् कुर्युः ? केचन वणिजो रक्षिभटैः परुषं भाषमाणाः कलहमारभन्त।

कदाऽस्माकं जनता विवेकिनी भवति ?। इटलीराष्ट्रे किं संजातमिति दूरदर्शने पश्यामः, पत्रिकासु पठामश्च। पाकिस्थाने कर्तव्यधर्महीनै राजकरणधुरीणैर्जनताया मृत्युभिः क्रीड्यते। अस्माकं राष्ट्रे पुनर्जनतैव मूर्खा बुभूषति ! युगादिपर्वणि तस्याः श्रद्धा। अये- सति मृत्यौ को नाम युगादिः ?

****************

अष्टादशस्य ''वर्ल्ड् स्यांस्क्रीट् कान्फेरेन्स्''इत्याख्यस्य महानाटकस्य बीजावाप '' आर्टिकल् अब्स्ट्राक्ट् इन्विटेषन्''द्वारा कृत एव। कियदुद्ध्रियते संस्कृतमनेन महानाटकेनेति द्रष्टव्यम्।